अथ द्वादशः स्तोत्राणि

श्री गुरुभ्यो नमः

हरिः ऒम्

अथ प्रथमोध्यायः

वंदे वंद्यं सदानंदं वासुदेवं निरंजनं ।
इंदिरापतिमाद्यादि वरदेश वरप्रदं ॥ १ ॥

नमामि निखिलाधीश किरीटाघृष्टपीटवत् ।
हृत्तमः शमनेऽकार्भं श्रीपतेः पादपंकजं ॥ २ ॥

जांबूनदरांबराधारं नितंबं चिंत्यमीशितुः ।
स्वर्णमंजीरसंवीतं आरूडं जगदंबया ॥ ३ ॥

उदरं चिंत्यं ईशस्य तनुत्वेऽपि अखिलंबरं ।
वलित्रयांकितं नित्यं आरूडं श्रियैकया ॥ ४ ॥

स्मरणीयमुरो विष्णोः इंदिरावासमुत्तमैः (वासमुत्तमं) ।
अनंतं अंतवदिव भुजयोरंतरंगतं ॥ ५ ॥

शंखचक्रगदापद्मधराश्चिंत्या हरेर्भुजाः ।
पीनवृत्ता जगद्रक्षा केवलोद्योगिनोऽनिशं ॥ ६ ॥

संततं चिंतयेत्कंटं भास्वत्कौस्तुभभासकं ।
वैकुंठस्याखिला वेदा उद्गीर्यंतेऽनिशं यतः ॥ ७ ॥

स्मरेत यामिनीनाथ सहस्रामितकांतिमत् ।
भवतापापनोदीड्यं श्रीपतेः मुखपंकजं ॥ ८ ॥

पूर्णानन्य सुखोद्भासिं अंदस्मितमधीशितुः ।
गोविंदस्य सदा चिंत्यं नित्यानंदपदप्रदं ॥ ९ ॥

स्मरामि भवसंताप हानिदामृतसागरं ।
पूर्णानंदस्य रामस्य सानुरागावलोकनं ॥ १० ॥

ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितं ।
भ्रूभंगं पारमेष्ठयादि पददायि विमुक्तिदं ॥ ११ ॥

संततं चिंतयेऽनंतं अंतकाले विशेशतः ।
नैवोदापुः गृणंतोऽनंतं यद्गुणानां अजादयः ॥ १२ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु प्रथमस्तोत्रं संपूर्णं

## अथ द्वितीयस्तोत्रम्

स्वजनोदधिसंव्रुध्दि पूर्णचंद्रो गुणार्णवः ।
अमंदानंद सांद्रो नः सदाव्यादिंदिरापतिः ॥ १ ॥

रमाचकोरीविधवे दुष्ट दर्पोदवह्नये ।
सत्पांथजनगेहाय नमो नारायणाय ते ॥ २ ॥

चिदचिद्भेदमखिलं विधायाधाय भुंजते ।
अव्याकृतगृहस्थाय रमाप्रणयिने नमः ॥ ३ ॥

अमंदगुणसारोऽपि मंदहासेन वीक्षितः ।
नित्य मिंदिरयाऽनंदसांद्रो यो न्ॐइ तं हरिम् ॥ ४ ॥

वशी वशो न  कस्यापि योऽजितो विजिताखिलः ।
सर्वकर्ता न क्रियते तं नमामि रमापतिम् ॥ ५ ॥

अगुणाय गुणोद्रेक स्वरूपायादि कारिणे ।
विदारितारिसंघाय वासुदेवाय ते नमः ॥ ६ ॥

आदिदेवाय देवानां पतये सादितारये ।
अनाद्यज्ञानपराय नमः पारावराश्रय ॥ ७ ॥

अजाय जनयित्रेस्य विजिताखिलदानव ।
अजादि पूज्यपादाय नमस्ते गरुडध्वज ॥ ८ ॥

इंदिरामंदसांद्राग्य कटाक्षप्रेक्षितात्मने ।
अस्म दिष्टैक कार्याय पूर्णाय हरये नमः ॥ ९ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु द्वितीयस्तोत्रं संपूर्णं

## अथ तृतीयस्तोत्रम्

कुरु भुंक्ष्व च कर्म निजं नियतं हरिपाद विनम्रधिया सततम् ।
हरिरेव परो हरिरेव गुरुर्हरिरेव जगत्पितृमातृगतिः ॥ १ ॥

न ततोऽस्त्यपरं जगतीड्यतमं परमात्परतः पुरुषोत्तमतः ।
तदलं बहुलोकविचिंतनया प्रवणं कुरु मानसमीशपदे ॥ २ ॥

यततोऽपि हरेः पद संस्मरणे सकलं ह्यघमाशु लयं व्रजति ।
स्मरतस्तु विमुक्ति पदं परमः स्पुटमेष्यति तत्किमपाक्रियते ॥ ३ ॥

श्रुणुतामलसत्यवचः परमं शपथेरितमुच्छ्रित बाहु युगम् ।
न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ॥ ४ ॥

यदि नाम परो न भवेत्स (त) हरिः कथमस्य वशे जगदेतदभूत् ।
यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ॥ ५ ॥

न च कर्मविमामलकालगुण प्रभृतीशमचित्तनुतद्धियतः ।
चिदचित्तनुसर्वमसौ तु हरिर्यमयेदिति वैदिकमस्तिवचः ॥ ६ ॥

व्यवहारभिदापि गुरोर्जगतां न तु चित्तगता स हि चोद्य परम् ।
बहवः पुरुषाः पुरुषप्रवरो हरिरित्यवदत्स्वय मेव हरिः ॥ ७ ॥

चतुराननपूर्वविमुक्तगणा हरिमेत्यतु पूर्ववदेव सदा ।
नियतोच्छ विनीचतयैव निजां स्थितिमापुरिति स्मपरं वचनम् ॥ ८ ॥

आनंदतीर्थसन्नाम्ना पूर्णप्रज्ञाभिदायुजा ।
कृतं हर्यष्टकं भक्त्यापठतः पीयते हरिः ॥ ९ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु तृतीयस्तोत्रं संपूर्णं

## अथ चतुर्थस्तोत्रम्

निजपूर्ण सुखामितबोधतनुः परशक्तिरनंत गुणः परमः ।
अजरामरणः सकलार्तिहरः कमलापति रीड्यतमोऽवतुः नः ॥ १ ॥

यदसुप्तिगतो पि हरिः सुखवान् सुखरूपिण माहुरतो निगमाः ।
स्व (सु) मतिप्रभवं जगदस्य यतःपरभोधतनुंच ततःखपतिम् ॥ २ ॥

बहुचित्रजगद्बहुधारकरणात्पर शक्तिरनंतगुणः परमः ।
सुखरूपममुष्य पदं परमं   स्मरतस्तु भविष्यति तत्सततम् ॥ ३ ॥

स्मरणे हि परेशितुरस्य विभोर्मलिनानि मनांसि कुतः करणम् ।
विमलं हि पदं परमं स्वरतं तरुणार्क सवर्णमजस्य हरेः ॥ ४ ॥

विमलैः श्रुतिशाणनिशाततमैः सुमनोऽसिभिराशु निहत्य दृडम् ।
बलिनं निजवैरिणमात्म तमोभिदमीशमनंत मुपास्व हरिम् ॥ ५ ॥

स हि विश्वसृजो विभुशंभु पुरंदसूर्यमुखान परानमरान् ।
सृजतीड्य तमोऽवति हंति निजं पदमापयति प्रणतान् स्वधिया ॥ ६ ॥

परमोऽपि रमेशितुरस्य समो न हि कश्चिदभून्न भविष्यति च ।
क्वचिदद्यतनोऽपि न पूर्ण सदा गणीतेड्य गुणानुभवैकतनोः ॥ ७ ॥

इति देवतरस्य हरेः स्तवनं कृतवान् मुनिरुत्तममादरतः ।
सुखतीर्थ पदाभिहितः पठतस्तदिदंद भवति धृवमुच्च सुखम् ॥ ८ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु चथुर्थस्तोत्रं संपूर्णं

## अथ पंचमस्तोत्रम्

वासुदेवापरिमेय सुधामन् शुद्ध सदोदित सुंदरीकांत ।
धराधरधार(रि)ण वेदुरधर्तः सौधृतिदीधिति वेधृविधातः ॥ १ ॥

अधिकबंधं रंधय बोधा(ध)च्छिंदि पि(वि)धानं बंधुरमद्धा ।
केशव केशव शासक वंदे पाशधरार्चि (च्यु) त शूरवरेश ॥ २ ॥

नारायणामलकारण वंदे कारण कारण पूर्ण वरेण्य ।
माधव माधव साधक वंदे बाधक बोधक शुद्ध समाधे ॥ ३ ॥

गोविंद गोविंद पुरंदर वंदे स्कंदसु(स)नंदनवंदितपाद ।
विष्णोसृजिष्णो ग्रसिष्णो विवंदे कृष्ण सुदुष्ण वधिष्णो सुधृष्णो ॥ ४ ॥

मधुसूदन दानव सादनवंदे दैवतमोदित (दन) वेदितपाद ।
त्रिविक्रम निष्क्रम विक्रम वंदे सुक्रम संक्रमहुंकृतवक्त्र ॥ ५ ॥

वामन वामन भामन वंदे सामन सीमन सामन सानो ।
श्रीधर श्रीधर शंधर वंदे भूधर वार्धर कंदरधारिन् ॥ ६ ॥

हृषिकेश सुकेश परेश विवंदे शरणेश कलेश बलेश सुखेश ।
पद्मनाभ शुभोद्भव वंदे संभृत लोकभराभर भूरे ॥ ७ ॥

दामोदर दूरतरांतर वंदेदारितपारगपार परस्मात् ॥ ८ ॥

आनंद सुतीर्थ मुनींद्रकृता हरिगीतिरियं परमादरतः ।
परलोक विलोकन सूर्यनिभा हरिभक्ति विवर्धन शौंडतमा ॥ ९ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु पंचमस्तोत्रं संपूर्णं

## अथ षष्टस्तोत्रम्

देवकिनंदन नंदकुमार वृंदावनांचन गोकुल चंद्र ।
कंदफलाशन सुंदररूप नंदित गोकुल वंदितपाद ॥ १ ॥

इंद्रसुतावकनंदन हस्त चंदनचर्चित सुंदरिनाथ ।
इंदीवरोदर दलनयन मंदरधारिन् गोविंद वंदे ॥ २ ॥

चंद्रशतानन कुंदसुहास नंदितदैवतानंद सुपूर्ण ।
मत्स्यकरूपलयोद विहारिन् वेदविनेतृ चतुर्मुख वंद्य ॥ ३ ॥

कूर्मस्वरूपक मंदरधारिन् लोकविधारक देववरेण्य ।
सूकररूपक दानवशत्रो भूमिविधारक यज्ञवरांग ॥ ४ ॥

देव नृसिंह हिरण्यकशत्रो सर्वभयांतक दैवतबंधो ।
वामन वामन माणववेष दैत्यवरा(कुलां)ंतक कारण रूप (भूत) ॥ ५ ॥

राम भृगूद्वह सूर्जितदीप्ते क्षत्रकुलांतक शंभुवरेण्य ।
राघव राघव राक्षस शत्रो मारुति वल्लभ जानकी कांत ॥ ६ ॥

देवकि नंदन सुंदररूप रुक्मिणि (णी) वल्लभ पांडव बंधो ।
दैत्य विमोहक नित्य सखादे देवसु (वि) बोधक बुद्ध स्वरूप ॥ ७ ॥

दुष्ट कुलांतक कल्किस्वरूप धर्म विवधन मूलयुगादे ।
नारायणामलकारण मूर्ते पूर्ण गुणार्णव नित्य सुबोध ॥ ८ ॥

सुख(आनंद)तीर्थ मुनींद्र कृपा हरिगाथा पापहराशुभनित्य सुखार्थ

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु षष्टस्तोत्रं संपूर्ण

अथ सप्तमस्तोत्रम्

विश्वस्थिति प्रळय सर्गमहाविभूति वृत्तिप्रकाशनिय मावृति बंधमोक्षाः ।

यस्या अपांगलवमात्रत ऊर्जिता सा श्रीः यत्कटाक्ष बलवत्यजितं नमामि ॥ १ ॥

ब्रह्मेशशक्ररविधमशशांक पूर्वगीर्वाण संततिरियं यदपांगलेशं ।
आश्रित्य विश्वविजयं विसृजत्य(विदधा)चिंत्या श्रीः यत्कटाक्ष बलवत्यजितं नमामि ॥ २ ॥

धर्मार्थकामसुमति प्रचयाद्य शेष सन्मंगलं विदधतेयदपांगलेशं ।
आश्रित्य तत्प्रणतसत्प्रणता अपीड्याः श्रीः यत्कटाक्ष बलवत्यजितं नमामि ॥ ३ ॥

षड्वग निग्रहनिरस्तसमस्तदोषाध्यायंति विष्णु मृषुयोयदपांगलेशं ।
आश्रित्य यानपि समेत्य न याति दुःखं श्रीः यत्कटाक्ष बलवत्यजितं नमामि ॥ ४ ॥

शेषाहिवैरिशिवशक्रमनुप्रधानचित्रोरुकर्मरचनं यदपांगलेशं ।
आश्रित्य विश्वमुखिलं विदधाति धाता श्रीः यत्कटाक्ष बलवत्यजितं नमामि ॥ ५ ॥

शक्रोग्रदीधिति हिमाकरसूयसूनुपूर्वं निहत्य निखिलं यदपांगलेशम् ।
आश्रित्य नृत्यति शिवः प्रकटोरु शक्तिः श्रीः यत्कटाक्ष बलवत्यजितं नमामि ॥ ६ ॥

तत्पाद पंकज महासनतामवाप शर्वादिवंद्य चरणो यदपांगलेशम् ।
आश्रित्य नागपतिरन्य सुरैर्दुरापां श्रीः यत्कटाक्ष बलवत्यजितं नमामि ॥ ७ ॥

नागारिरुग्रबल पौरुष आप विष्णु वा(म्णोवा)हत्वमुत्त मजवो यदपांगलेशम् ।
आश्रित्य शक्रमुखदेवगणै रचिंत्यं श्रीः यत्कटाक्ष बलवत्यजितं नमामि ॥ ८ ॥

आनंद तीर्थमुनिसन्मुखपंकजोत्थं साक्षाद्रमा हरिमनः प्रियमुत्तमार्थम् ।
भक्त्यापठत्यजितमात्मनि सन्निधाय यःस्तोत्रमेतभियाति तयोरभीष्टम् ॥ ९ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं

द्वादशस्तोत्रेषु सप्तमस्तोत्रं संपूर्णं

अथ अष्टमस्तोत्रम्

वंदिताशेषवंद्योरुवृंदारकं चंदनाचर्चितो दारपीनांसकम् ।
इंदिराचंचलापांगनीराजितं मंदरोद्धारि वृत्तोद्धुजाभोगिनं ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ १ ॥

सृष्टिसंहारलीलाविलासाततं पुष्टषाड्गुण्य सद्विग्रहोल्लासिनम् ।
दुष्ट निष्येषसंहारकमोद्यतं हृष्टपुष्टानु(ति)शिष्ट प्रजासंश्रयं ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ २ ॥

उन्नतप्रार्थिताशेषसंसाधकं सन्नतालौकिका नंदद श्रीपदम् ।
भिन्नकर्माशयप्राणिसंप्रेरकंतन्नकिंनेति विद्वत्सु मिमांसितं ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ ३ ॥

विप्रमुख्यैः सदावेदवादोन्मुखैः सुप्रतापैः क्षीतिशेश्वरैश्चार्चितं ।
अप्रतर्क्योरुसंविद्गुणं निर्मलं सप्रकाशाजरानंद रूपंपरं ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ ४ ॥

अत्ययो यस्यकेनापिनक्वापिहिप्रत्यतो यद्गुणेषूत्तमानांपरः ।
सत्यसंकल्प ऐको वरोण्यो वशी मत्यनूनैः सदा वेदवादोदितः ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ ५ ॥

पश्यतां दुःखसंताननिर्मूलनं दृश्यतां दृश्यतामित्य जेशाचि(र्थि)तम् ।
नश्यतां दूरगं सर्वदाप्यात्मगं पश्यतां स्वेच्चया सज्जनेष्वागतं ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ ६ ॥

अग्रजं यः ससर्जाजमग्र्याकृतिं विग्रहोयस्य सर्वेगुणा ऐव हि ।
उग्र आद्योऽपि यस्यात्मजाग्र्यात्मजः सद्गृहीतः सदायः परंदैवतम् ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ ७ ॥

अच्युतो यो गुणैर्नित्यमेवाखिलैः प्रच्युतोऽशेष दोषैः सदापूर्तित ।
उच्यते सववेदोरु वादैरजः स्वजितो(च्यते) ब्रह्मरुद्रेंद्र पूवैस्सदा ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ ८ ॥

धार्यते येनविश्वं सदाजादिकं वार्यतेशेषदुःखं निजध्यायिनां ।
पार्यते सर्वमन्यैर्नयत्पार्यते कार्यते चाखिलं सर्वभूतैः सदा ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ ९ ॥

सवपापानि यत्संस्मृतेः संक्षयसर्वदा यांतिभक्त्याविशुद्धात्मनां ।
शर्वगुर्वादिगीर्वाण संस्थानदः कुर्वते कर्म यत्प्रीतये सज्जनाः ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ १० ॥

अक्षयं कर्मयस्मिन् परेस्वर्पितंऽप्रक्ष यं यांति दुःखानिःयन्नामत ।
अक्षरोयोऽजरः सर्वदैवामृतः कुक्षिगं यस्य विश्वं सदाजादकम् ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ ११ ॥

नंदितीर्थोरुसन्नामिनो नंदिनः संदधानाः सदानंददेवे मतिम् ।
मंदहासारुणापांग दत्तोन्नतिं न(वं)दिता शेषदेवादि वृंदं सदा ।
प्रीणयामो वासुदेवं देवतामंडला खंडमंडनं प्रीणयामो वासुदेवं ॥ १२ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु अष्टमस्तोत्रं संपूर्ण

अथ नवमस्तोत्रम्

अतिमत तमोगिरिसमितिविभेदन पितामहभूतिद गुणगणनिलय ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ १ ॥

विधिभवमुख सुरसतत सुवंदित रमा मनोवल्लभ भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ २ ॥

अगणितगुणगण मयशरीर हे विगतगुणेतर भवमम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ ३ ॥

अपरिमित सुखनिधिविमलसुदेह हे विगतसुखेतर भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ ४ ॥

प्रचलितलयजलविहरण शाश्वतसुखमयमीन हे भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ ५ ॥

सुरदितिज सुबलविलुलितमंदरधरपर (वर) कूर्म हे भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ ६ ॥

सगिरिवरधरातलवह सुसूकर परमविबोध हे भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ ७ ॥

अतिबलदितिसुतहृदयविभेदन जयनृहरेऽमल भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ ८ ॥

बलिमुखदितिसुतविजयविनाशन जगदवनाजित भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ ९ ॥

अविजितकुनृपतिसमितिविखंडन रमावर वीरप भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ १० ॥

खरतरनिशिचरदहन परामृत रघुवर मानद भव मम शरणम् ।

शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ ११ ॥

सललिततनुवर वरद महाबल यदुवर पार्थप भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ १२ ॥

दितिसुतविमोहन विमलविबोधन परगुणबुद्ध हे भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ १३ ॥

कलिमलहुतवह सुभगमहोत्सव शरणद कल्कीश हे भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ १४ ॥

अखिलजनिविलय परसुख कारण परपुरुषोत्तम भव मम शरणम् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ १५ ॥

इति तवनुतिवरसततरतेर्भव सुशरणमुरु सुखतीर्थ मुनेर्भगवन् ।
शुभतमकथाशय परमसदोदित जगदेककारण राम रमारमण ॥ १६ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु नवमस्तोत्रं संपूर्णं

## अथ दशमस्तोत्रम्

अव नः श्रीपतिरप्रतिरधिकेशादिभवादे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १ ॥

सुरवंध्यादिप सद्वरभरिता शेषगुणालम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ २ ॥

सकलध्वांतविनाशन परमानंद सुधाहो ।

करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ३ ॥

त्रिजगत्पोत सदार्चितशरणाशापतिधातो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ४ ॥

त्रिगुणातीतविधारक परितो देहि सुभक्तिम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ५ ॥

शरणं कारणाभावन भव मे तात सदाऽलम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ६ ॥

मरणप्राणद पालक जगदीशाव सुभक्तिम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ७ ॥

तरुणादित्य सवर्णकचरणाब्जामलकीर्ते ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ८ ॥

सलिलप्रोत्थसरागकमणिवर्णोच्चनखादे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ९ ॥

खज(कज)तूणीनिभपावन वरजंघामितशक्ते ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १० ॥

इभहस्तपरभशोभनपरमोरु स्थर(ल)माले ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ११ ॥

असनो(मो)त्पुल्लसुपुष्पकसमवर्णावरणांते ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १२ ॥

शतमोदोद्भवसुंदरि वरपद्मोत्थितनाभे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १३ ॥

जगदागूहकपल्लवसमकुक्षे शरणादे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १४ ॥

जगदंबामलसुंदरगृहवक्षोवरयोगिन् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १५ ॥

दितिजांतप्रद चक्रधरगदायुग्वरबाहो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १६ ॥

परमज्ञानमहानिधिवदन श्रीरमणेंदो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १७ ॥

निखिलाघौघविनाशन परसौख्यप्रददृष्टे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १८ ॥

परमानंदसुतीर्थमुनिराजो हरिगाथाम् ।
कृतवान्नित्यसुपूर्णपरमानंदपदैषि(षी)न् ॥ १९ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु दशमस्तोत्रं संपूर्णं

## अथ ऐकादशस्तोत्रम्

उदीर्णमजरं दिव्यममृतस्यंद्यधीशितुः ।
आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभि वंदितम् ॥ १ ॥

सर्ववेद(देव)पदोद्गीतमिंदिराधारमुत्तमम् ।

आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभि वंदितम् ॥ २ ॥

सर्वदेवादिदेवस्य विदारितमहत्तमः ।
आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभि वंदितम् ॥ ३ ॥

उदारमादरान्नित्यमनिंद्यं सुंदरीपतेः ।
आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभि वंदितम् ॥ ४ ॥

इंदीवरोदरनिभं संपूर्णं वादिमोहन(द)म् ।
आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभि वंदितम् ॥ ५ ॥

दातृसर्वामरैश्वर्यविमुक्त्यादेरहो वरम् ।
आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभि वंदितम् ॥ ६ ॥

दूराद्दूरतरं यत्तु तदेवांतिकमंतिकात् ।
आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभि वंदितम् ॥ ७ ॥

पूर्ण सर्वगुणैकार्णमनाद्यंतं सुरेशितुः ।
आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभि वंदितम् ॥ ८ ॥

आनंदतीर्थ मुनिना हरेरानंद रूपिणः ।
कृत स्तोत्रमिदं पठन्नानंदमाप्नुयात् (माप्तयात्) ॥ ९ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु ऐकादशस्तोत्रं संपूर्णं

अथ द्वादशस्तोत्रम्

आनंदमुकुंद अरविंदनयन ।

आनंदतीर्थपरानंदवरद ॥ १ ॥

सुंदरीमंदिर गोविंद वंदे ।
आनंदतीर्थपरानंदवरद ॥ २ ॥

चंद्रसुरेंद्रसुवंदित वंदे ।
आनंदतीर्थपरानंदवरद ॥ ३ ॥

चंद्रकमंदिरनंदकवंदे ।
आनंदतीर्थपरानंदवरद ॥ ४ ॥

वृंदारकवृंदसुवंदित वंदे ।
आनंदतीर्थपरानंदवरद ॥ ५ ॥

मंदारसूनसुचर्चित वंदे ।
आनंदतीर्थपरानंदवरद ॥ ६ ॥

इंदिरानंदक सुंदर वंदे ।
आनंदतीर्थपरानंदवरद ॥ ७ ॥

मंदिरस्यंदनस्यंदक वंदे ।
आनंदतीर्थपरानंदवरद ॥ ८ ॥

आनंदचंद्रिकास्यंदक (स्पंदन) वंदे ।
आनंदतीर्थपरानंदवरद ॥ ९ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु द्वादशस्तोत्रं संपूर्णं

॥ भारतीरमणमुख्यप्राणांतर्गत श्रीकृष्णार्पणमस्तु ॥